ARES SANSKRIT SERIES;
A
LECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE,
UNDER THE SUPERINTENDENCE OF
R. T. H. GRIFFITH, M. A., C. I. E.
AND
G. THIBAUT, PH. D.
Nos. 99, 100, 103, 107, 110, 114, 117, 118, 119, 120, 124, 125, 127, 128 & 129.

---

# श्रीमदणुभाष्यम् ।

श्रीश्रीवल्लभाचार्यविरचितम् ।

गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितभाष्य-
प्रकाशाख्यव्याख्यासमेतम् ।

श्रीमदाचार्यश्रीवल्लभाधीश्वरशुद्धाद्वैतसंप्रदायविदुषा
रत्नगोपालभट्टेन संशोधितम् ।

# ANU BHÂSAYA,

ON BRAHMASÛTRA BY ŚRÎ VALLABHÂCHÂRYA,
With the Commentary called Bhâshya Prakâśa,
By Goswâmi Śrî Purushottamjee Mahârâj.
EDITED BY RATNA GOPÂL BHATTA.

BENARES:
*Published by the Proprietors Messrs. Braj B. Das & Co.,*
AND SOLD BY H. D. GUPTA,
*Secretary, Chowkhambâ Sanskrit Book Depôt.*

Printed at the Vidyâ Vilâs Press,
BENARES.

1907.

श्रीकृष्णाय नमः ।

अथैतत् किल श्रीवल्लभाचार्यविरचितं ब्रह्मसूत्राणुभाष्यं गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितप्रकाशाख्यव्याख्यासहितं संमुद्रय प्रकाशितं वरीवर्ति । तत्र श्रीवल्लभाचार्याः पूर्वपुरुषपरम्परातः स्वयञ्च बहुसोमयाजिनस्तैलङ्गवेल्लनाटीज्ञातीय-खम्भंपाटीवारु-इत्युपनामवतः श्रीलक्ष्मणभट्टदीक्षितस्य सूनुतया, पञ्चत्रिंशदधिकपञ्चदशशततमे १५३५ विक्रमार्कवत्सरे पूर्णिमान्तगणनया माधवकृष्णैकादश्याम् आविर्भूताः ।

श्रीपुरुषोत्तमचरणास्तु श्रीवल्लभाचार्यात्मजगोस्वामिश्रीश्रीविठ्ठलनाथदीक्षितसूनुषु तातीयीकश्रीबालकृष्णजीतः पुरुषगणनया पञ्चमीं संख्यां भूषयन्तः प्रादुर्भूताः ।

तत्र श्रीवल्लभाचार्यशुद्धाद्वैतसम्प्रदायस्य मूलभूतोऽयं भाष्यग्रन्थः । स च शुद्धलिखितपुस्तकतः संशोध्य संमुद्रितः ।

भाष्यप्रकाशस्तु अत्यन्तं दुर्लभः । स च श्रीवल्लभाचार्यकुलकमलदिवाकर—श्रीश्रीमुकुन्दराय—श्रीगोपाललालप्रभुसेवाप्रवीणश्रीमत्प्रभुचरणगोस्वामिश्रीविठ्ठलनाथदीक्षिततनूजनु:-श्रीमहाराजगोस्वामि- श्रीयदुनाथजीवंशावतंस-षष्ठगृहतिलकितकाशीवास्तव्यगोस्वामिश्रीगिरिधरजीमहाराजैः श्रीरामकृष्णभट्टाय वितीर्णं शस्तं पुस्तकं समवलम्ब्य प्रकाशितः ।

• अत्र संमुद्रणे निरुक्तपुस्तकाधारेण लेखितं सकलप्राचीनदुर्लभग्रन्थसम्पादनशील- श्रीयुतगोविन्ददासमहाशयसकाशादपरं प्रकाशपुस्तकमानीय संमेलनाय मन्निकटे स्थापितवतो नानाविधदर्शनप्रकाशनपरायणश्रीयुतहरिदासगुप्ताभिधमहाशयस्य प्रोत्साहनेन•यथामति संशोधितवानस्मि ग्रन्थरत्नद्वयम् । तत्र मत्प्रमादाज्जातानां स्खलितानां क्षमापनं सन्तो मया प्रार्थनीया एवेत्यल विस्तरतः ॥

सत्पक्षपातिनो हंसा नूनं नालीकवल्लभाः ॥
गुणं गृह्णीत, मा दोषं नीरक्षीरविवेकिनः ॥ १ ॥

रत्नगोपालभट्टः ।

बनारससंस्कृतसीरीज़नाम्नी वाराणसेयसंस्कृतपुस्तकावली ।

इयं पुस्तकावली खण्डशो मुद्रिता भवति । अस्यां संस्कृतभाषानिबद्धा बहवः प्राचीना दुर्लभा उत्तमोत्तमाः केचिदङ्गलभाषानुवादसहिताश्च ग्रन्था मुद्रिता भवन्ति । तांश्च ग्रन्थान् काशिकराजकीयसंस्कृतपाठशालीयपण्डिता अन्ये ऽपि विद्वांसः शोधयन्ति । यैर्ग्राहकमहाशयैरियं पुस्तकावली नियमेनाविच्छेदेन संग्राह्या तैस्तदेकैकस्य खण्डस्य ॥) मूल्यं प्रापणव्ययश्च =) देयः । अन्यैर्महाशयैः कानिचित् खण्डानि संग्राह्याणि तैश्च प्रत्येकं खण्डानां १) मूल्यं प्रापणव्ययश्च =) देय इति ॥

तत्र मुद्रिता ग्रन्थाः ।

| | | |
|---|---|---|
| सिद्धान्ततत्त्वविवेकः खण्डानि ५ | ५ | ० |
| अर्थसङ्ग्रह अंग्रेजीभाषानुवादसहितः | १ | ० |
| तन्त्रवार्त्तिकम् खण्डानि १३ | १३ | ० |
| कात्यायनमहर्षिप्रणीतं शुक्लयजुःप्रातिशाख्यम् सभाष्यं ख० ६ | ६ | ० |
| सांख्यकारिका चन्द्रिकाटीकागौडपादभाष्यसहिता | १ | ० |
| वाक्यपदीयम् खण्डानि ५ ( प्रथमभागः प्रथमद्वितीयकाण्डे पुण्यराजटीकासहित खण्ड ३ । द्वितीयभागः तृतीयाकाण्डम् हेलाराजटीकासहित खण्ड २ ) | ५ | ० |
| रसगङ्गाधरः खण्डानि ९ | ९ | ० |
| परिभाषावृत्तिः खण्डे २ | २ | ० |
| वैशेषिकदर्शनं किरणावलीटीकासंवलितप्रशस्तपादप्रणीतभाष्यसहितम् खण्ड २ | २ | ० |
| शिक्षासङ्ग्रहः खण्डानि ५ | ५ | ० |
| नैष्कर्म्यसिद्धिः खण्डानि ४ | ४ | ० |
| महर्षिकात्यायनप्रणीतं शुक्लयजुस्सर्वानुक्रमसूत्रम् सभाष्यम् | ३ | ० |
| ऋग्वेदीयशौनकप्रातिशाख्यं सभाष्यम् खण्डानि ४ | ४ | ० |
| (बृहत्) वैयाकरणभूषणम् पदार्थदीपिकासहितम् खण्डानि ४ | ४ | ० |
| विवरणोपन्यासः सटीकवाक्यसुधासहितः खण्डे २ | २ | ० |
| तत्त्वदीपनम् ( पञ्चपादिकाविवरणस्य व्याख्यानम् ) ख० ८ | ८ | ० |
| वेदान्तदीपः (श्रीभगवद्रामानुजाचार्यविरचितः) खण्डानि ३ | ३ | ० |
| टुप्टीका खण्डानि ४ | ४ | ० |

श्रीगोपीजनवल्लभाय नमः ।

# अथ श्रीमदणुभाष्यम् ।

## श्रीश्रीवल्लभाचार्यविरचितम् ।

### गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित-<br>भाष्यप्रकाशाख्यव्याख्यासमेतम् ।



श्रीकृष्णाय नमः ॥ सङ्गीतं श्रुतिमूर्द्धभिस्तदविदां वागाद्यतीतं विदां
दूरं साधनसम्पदां निरुपधिस्नेहैः सुखापं वृतैः ॥
रासोल्लासवशंवदव्रजवधूवृन्दे वसन्तं सदा
दासक्लेशहरं मुदा परतरं श्रीकृष्णदेवं श्रये ॥ १ ॥
मन्दान् वीक्ष्य जनान् विभुः श्रुतिगणं व्यस्याऽथ कारुण्यतः
स्त्रीशूद्रादिहिताय भारतमुखेनोक्त्वा तदर्थं पुनः ॥
बुद्धिं शोधयितुं चकार सुविदां यो ब्रह्मसूत्रात्मकं
वेदान्तार्थविकासकाद्भुतपदं शास्त्रं गुणैरुज्ज्वलम् ॥ २ ॥
एवं सर्वहितं चरन्नपि यदाऽखिद्यत्तदा नारदात्
तत्रोपायमवेत्य खेदहतये दृष्ट्वा समाधौ हरिम् ॥
श्रीमद्भागवतेन संशयमहन् भक्तिप्रचारोद्यत-
स्तं कृष्णं मुनिमानमामि सततं ज्ञानावतारं हरेः ॥ ३ ॥
सर्गादौ स्वमनं समस्य विधये यं ब्रह्मवादं जगौ
कौन्तेयोद्धवयोः प्रकाश्य च पुनर्वेदान्तसारं हरिः ॥
तं व्यासाद्यगोचरं प्रथयितुं यैर्भाष्यमाभाषितं
तानाचार्यवरान्नमामि करुणान् श्रीवल्लभाख्यान् प्रभून् ॥४॥
श्रीवल्लभप्रतिनिधिं तेजोराशिं दयार्णवम् ॥
गुणातीतं गुणनिधिं श्रीगोपीनाथमाश्रये ॥ ५ ॥
श्रीविट्ठलेशपादाब्जनखचन्द्ररुचः सदा ॥

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥

इदमत्र विचार्यते । वेदान्तानां विचार आरम्भणीयो नवेति ।

---

अलङ्कुर्वन्तु मत्स्वान्तं मायावादतमोहराः ॥ ६ ॥
तत्पुत्रान् सह सूनुभिर्निजगुरून् श्रीकृष्णचन्द्राह्वयान् ॥
भक्त्या नौमि पितामहं यदुपतिं तातं च पीताम्बरम् ॥
वन्दे च व्रजराजमन्वयमणिं यद्रोचिषा माद्दशो-
ऽप्यासीन्मूर्ध्नि कृपापरः प्रभुवरः श्रीबालकृष्णः स्वयम् ॥ ७ ॥
श्रीवल्लभाचार्यपदाम्बुजाते भक्त्या मुदाऽन्तर्हृदि संनिवेश्य ॥
भाष्यप्रकाशे प्रयतेऽतिदीनो निःसाधनस्तत्करुणाबलेन ॥ ८ ॥
आचार्यवाचः प्रणमामि भाष्यसुबोधिनीस्था इतराश्च यास्ताः ॥
मत्स्वान्त आगत्य कृताप्लुतास्ता मदीयवाचां रचयन्त्वलङ्कृतिम् ॥ ९ ॥

अथ स्वालौकिकानुभावप्रकटनहृदयस्य भगवत आज्ञया तद्धर्माविर्भूताः श्रीमदाचार्यास्तस्यानुभावस्य सर्ववेदान्ततात्पर्यगोचरत्वज्ञापनाय वेदार्थतामरसतरणेर्भगवतो बादरायणस्य सूत्राणि व्याकरिष्यमाणाः, ' सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुरिति ' भाष्यलक्षणात् सूत्रोपन्यास एवानुसरणसिद्धः स्वकृतेरादित एव भाष्यत्वाय सूत्रीयाथशब्देनैव मङ्गलसिद्धेश्च सूत्रमेवादौ पठन्ति * अथातो ब्रह्मजिज्ञासेति * नच मङ्गलाचरणान्तरादर्शनाच्छिष्टाचारविरोधः शङ्कनीयः । महाभाष्ययोगभाष्ययोर्ग्रन्थकृत्कृतस्याथशब्दातिरिक्तस्य मङ्गलस्यादर्शनेन, शाबरभाष्ये च ' अथातो धर्मजिज्ञासा ' इति सूत्रमत्रोपन्यस्य भाष्यारम्भदर्शनेन च विरोधाभावादिति । अस्यारम्भसूत्रत्वादधिकारिविषयसम्बन्धप्रयोजननिरूपणद्वारा शास्त्रारम्भः समर्थनीयः । शास्त्रप्रवृत्त्यावश्यकत्वहेतुरूपा सङ्गतिश्च निरूपणीया । अन्यथा प्रेक्षावत्प्रवृत्त्यभावेन शास्त्रवैयर्थ्यं स्यात् । शास्त्रस्य वैधत्वमपि विचारणीयम् । अन्यथा वेदान्तानुपयुक्तत्वं, प्रामाणिकानादरणीयत्वं च स्यात् । तदिदं सर्वं हृदि कृत्वा भगवता श्रीबादरायणाचार्येणेदमधिकरणरूपं सूत्रं प्रणीयते, न तु ब्रह्मविचारप्रतिज्ञामात्रमत्र क्रियत इत्याशयेनाहुः * इदमित्यादि *

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् । सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्' इति लक्षणाद् विषयादिपञ्चकघटितं वाक्यमधिकरणम् । तेनास्मिन् सूत्रे, इदं वक्ष्यमाणं बुद्धिस्थं विचार्यते । अग्रिमसूत्रेषु वेदान्तानां विचारणीयत्वादुपोद्घातेन चिन्त्यत इत्यर्थः । विषयादिकमाहुः * वेदान्तानामित्यादि * नन्वत्रायं विषयाद्युपन्यासो न युक्तः । असौत्रत्वात् । किन्तु, ब्रह्मजिज्ञासा कार्या न वा ? ब्रह्म जिज्ञास्यं न वा ? इत्येवं सूत्रानुसरणाद् युक्त इति चेन्न । तथोपन्यासे, तपसा ब्रह्म विजिज्ञासस्वेतिश्रुत्या तपस एवोपदेशात् तद्विहाय व्यासपादैः किमिति वेदान्तवाक्यानि विचार्यन्ते, तपः कुतो नोपदिश्यत इत्याशङ्का स्यात् श्रुतिविरुद्धत्वं च भायात् । एवमुपन्यासे त्वधीतवेदस्य, वेदान्तविज्ञानसुनिश्चितार्था इतिश्रुतिस्फुरणादस्यां च श्रुतावर्थनिश्चयं प्रति वेदान्तविज्ञानस्य हेतुताकथनात् तस्य च विचारसाध्यत्वात् तत्स्फूर्त्याशङ्कानुदयाद् युक्त इति ।

किञ्च । जिज्ञासापदस्य च यौगिकार्थ एव प्रायः प्रसिद्ध इति ब्रह्मज्ञानेच्छा कर्तव्या न वा, ब्रह्म ज्ञानेच्छाविषयं कार्यं न वेति प्रथमेऽर्थे बोधे, ततस्तावन्मात्रस्यापुरुषार्थत्वात् तत्रानुपपत्तौ भातायां पश्चाद् विचारं लक्षयित्वा ततस्तत्कर्तव्यत्वादिकं विचार्यम् । तदपि वेदान्तैरेव वक्ष्यमाणरीत्या विचार्यम् । अन्यथाऽऽकस्मिकता स्यात् । अत आवश्यकत्वादपि युक्तः ।

किञ्च । व्यासप्रवृत्तिबीजबोधनार्थत्वेनापि युक्तः । तथाहि । प्रथमस्कन्धे चतुर्थाध्याये ' द्वापरे समनुप्राप्त ' इत्यारभ्य, ' एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ! ' इत्यन्तेन सर्वेषां श्रेयोऽर्थे प्रवृत्तिर्व्यासचरणानामुक्ता । पञ्चमे च, जिज्ञासितमधीतं च यत्तद् ब्रह्म सनातनमिति नारदेन ब्रह्मविचारान्तातायाः कृतस्तथात्वं बोधितम् । तथा च ज्ञानविधिनार्थज्ञानार्थं प्रवृत्तानपि यदा जैमिनीयादिदर्शनैरेकदेशीयविरुद्धज्ञानवतो दृष्टवांस्तदा भारतकरणोत्तरमत्र प्रवृत्तः । वेदार्थनिश्चयो वेदान्तार्थनिश्चयं विना न भविष्यतीति । अत एवात्राग्रे वेदान्तवाक्यैरेव ब्रह्मविचारदर्शनम् । ब्रह्मणः सर्ववेदार्थत्वस्याग्रे सूत्रेषु स्फुटत्वाच्च । तदर्थं वेदान्तविचारावश्यकत्वमवश्यं साधनीयम् । तेन तत्र हेत्वाकाङ्क्षोपशमात् । अतस्तदुपोद्घाततयाऽयं विचारोऽपि शेषषष्ठ्यन्तब्रह्मपदादेव बोध्यत इति सौत्रत्वाद् युक्त इति ।

किं तावत् प्राप्तम् । नारम्भणीय इति । कुतः ।
साङ्गोऽध्येयस्तथा ज्ञेयो वेदः शब्दाश्च बोधकाः ।
निःसन्दिग्धं तदर्थाश्च लोकवद् व्याकृतेः स्फुटाः ॥

---

तत्र विषयो नामापाततः प्रतिपन्नः सन्दिग्धोऽर्थः । तादृशश्चात्र वेदान्तविचारो न तु वेदान्ताः । तेषामग्रिमसूत्रेषु विचार्यत्वात् । विषयः संशयः । एकधर्मिकविरुद्धकोटिद्वयावगाहि ज्ञानम् । तदाकारश्चात्र, आरम्भणीयो न वेत्यनेनोक्तः । पूर्वपक्षः प्रतिवादिमतम् । तदाहुः *नारम्भणीय*इति । तत्र पृच्छन्ति*कुत*इति । वेदान्तविज्ञानसुनिश्चितार्था इतिश्रुतावर्थनिश्चयं प्रति वेदान्तविज्ञानस्य हेतुताबोधनाद् विचारं विना च तदसम्भवात् स आवश्यक इति कुतो नेत्युच्यत इत्यर्थः । एवं प्रश्ने प्रतिवादी अनारम्भणीयतामुपपादयन् गृह्णाति * साङ्ग* इत्यादि । अयमर्थः । वेदान्तविचारस्यारम्भणीयत्वं वदता सिद्धान्तिना विधिप्रयुक्त्याऽऽरम्भणीयत्वं वक्तव्यम् । तत्र विचारे प्रत्यक्षविधेरदर्शनात् कथञ्चित् कुतश्चिद् वैधत्वं साधनीयम् । ततश्च कर्मादिविधिभ्यस्तत्सिद्ध्यसम्भवादध्ययनादिविधिभ्यः साधनीयम् । तत्र, स्वाध्यायोऽध्येतव्य इत्येकः । अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेदित्यपरः । साङ्गो वेदो ध्येयो ज्ञेयश्चेत्यन्यः । एते त्रयः पूर्वकाण्डस्थाः । श्रोतव्य इत्यादिरुत्तरकाण्डस्थश्चेतरः ।

तत्र भाट्टास्तावदेवं मन्यन्ते । अध्ययनविधेरक्षरग्रहणमात्रपर्यवसानेऽदृष्टकल्पनापत्तेरर्थज्ञानरूपदृष्टफलार्थतैव युक्ता । न च विमतं वेदाध्ययनमर्थज्ञानहेतुरध्ययनत्वाद् भारताध्ययनवदित्यनुमानेनाध्ययनस्य स्वाध्यायसंस्कारद्वाराऽर्थज्ञानहेतुत्वप्राप्तेर्न तावत्पर्यन्तं विधिव्यापारो युक्त इति वाच्यम् । विमतं वेदाध्ययनं नार्थज्ञानहेतुर्वेदाध्ययनत्वादाधुनिकाध्ययनवदिति प्रत्यनुमानेन तद्बाधात् । न च लोकेऽवगतसामर्थ्यानां शब्दानां वेदेऽपि बोधकत्वाल्लिखितपाठादिनाऽप्यर्थज्ञानसम्भवात्सामर्थ्यबलादेव तत्प्राप्तेरर्थज्ञानांशे तस्यापूर्वविधित्वाभावान्न तत्पर्यन्तं विधिव्यापारो युज्यत इति वाच्यम् । अर्थज्ञानांशेऽस्य नियमविधित्वाङ्गीकारात् । न च यथाऽवघातनिष्पन्नैरेव तण्डुलैर्दर्शपूर्णमासापूर्वसाधनं पेषणादिनिष्पन्नैस्तथाऽध्ययनावगतैरेवा-

येन क्रत्वपूर्वसिद्धिर्नतु प्रकारान्तरावगमेनेति फलांशे नियमविधित्वं न युक्तम्, अनारभ्याधीतत्वेन श्रुत्याद्यभावेन च क्रत्वर्थताया अशाक्यवचनत्वादिति वाच्यम्। वैदिकशब्दानां विलक्षणत्वेन पूर्वोक्तरीत्या सम्यगर्थज्ञानाभावे गृहस्थादीनां द्रव्यादियज्ञासिद्धेः सर्वधर्मलोपप्रसङ्गात्। अतः पूर्वोक्तदूषणेनापूर्वविधित्वनियमविधित्वयोरशक्यवचनत्वेऽपि, वसन्ते ब्राह्मणमुपनयीतेत्यादिवाक्येषु द्वितीयानिर्देशेन तेषां संस्कार्यत्वावगमात् संस्कारस्य च कार्यान्तरयोग्यतासम्पादनरूपत्वादुपनयनसंस्कृतानां त्रैवर्णिकानां कार्यान्तरापेक्षत्वे तत्सन्निधिपठितस्याध्ययनस्य चानिर्दिष्टकर्तृकतया कर्त्रपेक्षत्वेन परस्पराकाङ्क्षासन्निधियोग्यत्वैस्त्रैवर्णिकानां यज्ञरूपकार्यान्तराधिकारनियमार्थत्वस्याध्ययनविधौ सुखेन सम्भवात्। एवञ्चाधानाग्निहोत्रादिविधयस्त्रैवर्णिकेषु विद्वत्सु सत्सु तानेवाधिकुर्वन्ति। अन्यथा चतुर्थावेरप्याक्षिपेरन्। सोऽयमधिकारो वक्ष्यमाणेऽपशूद्राधिकरणेऽध्ययनविधिप्रसादलभ्य इत्यध्ययनविधिरर्थज्ञानपर्यन्तसायीति।

प्राभाकरास्तु, 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय' इत्याचार्यकरणे विहितेनोपनयतेरात्मनेपदेनोपनयनरूपस्य माणवकसंस्कारस्याचार्यत्वसिद्धिप्रयोजनताप्रत्ययेऽपि, 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते' इति स्मृतौ क्त्वाप्रत्ययेनोपनयनस्याध्यापनाङ्गताप्रतीतेस्तत् कथमध्यापनस्योपकरोतीत्यपेक्षायां, शिष्यमिति, तमध्यापयेदिति च द्वितीयोक्तकर्मत्वलिङ्गादुपनेयासत्तिद्वारेति निश्चीयते। उपनीतोऽपि नाकिञ्चित्करोऽङ्गमिति तद्व्यापारापेक्षायां वाक्यान्तरे उपनयनं प्रक्रम्य विहितं वेदाध्ययनमध्यापनोपकारकत्वादुपनीतव्यापारतयाऽध्यवसीयते। तदेवं स्वाङ्गमुपनयनं प्रयुञ्जानोऽध्यापनविधिस्तद्द्वारेणाध्ययनं प्रयुङ्क्ते। ततश्चाध्ययनस्यापि प्रयोजने विचार्यमाणे स्वसमवेतत्वेनान्तरङ्गत्वादर्थज्ञानमेव तथात्वेन निश्चीयते, न त्वाचार्यत्वसिद्धिर्बहिरङ्गत्वात्। न च प्रथमावगतत्वेनाचार्यत्वसिद्धिरेवाध्ययनप्रयोजनं, न तु पश्चादवगतमर्थज्ञानमिति वाच्यम्। तत्सिद्धिं विनाऽप्यध्ययनानुष्ठानसम्भवेन प्रथमं तदनवगमात्। न च शाब्दादवगतो नियोग एव प्रयोजनमस्त्विति वाच्यम्। अर्थज्ञानस्यापि प्रतीयमानत्वेन त्यागायोगात्। नचैवमध्ययनस्यार्थज्ञानार्थत्वेऽध्ययन-

विधिनैवार्थज्ञानप्राप्तिः किमिति नाद्रियत इति शङ्क्यम् । अध्ययनविधेरधिकारशून्यत्वादाचार्यकरणविधिप्रयुक्त्याध्यात्मलाभानङ्गीकारे विश्वजिदादिवन्नियोज्यकल्पनापत्तेः । अतोऽध्यापनविधिप्रयुक्तमेवाध्ययनमर्थज्ञानं च, नाध्ययनविधिप्रयुक्तमित्याहुः ।

एवं मीमांसकमतद्वयेऽप्यर्थज्ञानस्य वैधत्वात् तदाक्षिप्तविचारस्यापि वैधत्वम् ।

रामानुजाचार्यास्तु, अध्ययनविधिना स्वाध्यायाख्यस्य वेदस्याक्षरराशेर्ग्रहणं विधीयते । तत्रेतिकर्तव्यताकाङ्क्षायामध्यापनविधिना, 'श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान्' इत्यादिभिरपेक्षितानि विधीयन्ते । तेनाचार्योच्चारणानूच्चारणरूपमध्ययनमक्षरराशिग्रहणफलकमित्यवगम्यते । तच्च चतुर्वर्गफलस्य विधिवाक्ये कर्मत्वेन बोधितस्य स्वाध्यायस्य कार्यान्तरयोग्यतासम्पादनरूपः संस्कारः । तेनाध्ययनविधिरक्षरग्रहणमात्रपर्यवसायी । अध्ययनगृहीतं च स्वभावादेवार्थबोधकमिति स्वाध्यायस्यापि तथात्वात् तत्रापाततोऽवगम्यमानानामर्थानां स्वरूपप्रकारविशेषनिर्णयाय वेदवाक्यविचाररूपमीमांसाद्वयश्रवणेऽधीतवेदः पुरुषः स्वत एव प्रवर्तते । तत्र कर्मस्वरूपनिरूपणे तेषामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चाऽमृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलकवेदान्तविचाररूपशारीरकमीमांसायामधिकरोतीत्याहुः ।

शैवस्तु, अध्ययनविधेरक्षरग्रहणमात्रपरत्वमङ्गीकृत्याध्ययनेनाऽऽपाततोऽर्थप्रतीतेस्तदनु ब्रह्मस्थूलोपासनभूतज्योतिष्टोमादिविधायकानां सूक्ष्मोपासनभूतदहरादिविद्याविधायकानां चेतरेतरविरोधाभासं पश्यंस्तद्विचारं पुरुषार्थाकाङ्क्षी पुरुषः स्वयमेव प्रवर्ततेऽतो नातिबन्धनो विचार इत्याह ।

भास्कराचार्यास्तु स्वाध्यायविधेरर्थावबोधपर्यवसितत्वेऽपि ब्रह्मज्ञानं तेनाक्षेप्तुं न शक्यम । यज्ञेन दानेनेति, शान्तो दान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वा आत्मन्येवात्मानं पश्येदिति श्रुत्या ब्रह्मज्ञानस्योपायान्तरसापेक्षत्वात् । कर्मावबोधनसमर्थेषु पुरुषेष्वध्ययनविधेः कृतार्थत्वेनोपायान्तराक्षेपाक्षमत्वात । श्रवणायापि बहुभिर्यो न लभ्य इत्यादिश्रुतेर्ब्रह्मणो दुर्ज्ञेयत्वाच्च । अतो ब्रह्मजिज्ञासा न त-

त्कारिता । किन्तु, श्रोतव्यो मन्तव्यः, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः, तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यादिवेदान्तविचारकारिता वास्त्वित्याहुः ।

तत्राध्ययनविधेरर्थज्ञानार्थत्वकल्पनमसङ्गतम् । यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीतिवाक्येनाक्षरग्रहणमात्रेऽपि फलबोधने तदतिहाय फलान्तरकल्पनस्यायुक्तत्वात् । वाक्यबलेनाऽदृष्टद्वारकत्वस्याप्युपपत्तेः । तेन तेन क्रत्वध्ययनेनास्याध्येतुरिष्टं मनोवाञ्छितं भवतीति इष्टफलार्थत्वस्यापि शक्यवचनत्वाच्च । नच प्रत्यक्षविरोधः । इदानीन्तनाध्ययनस्य व्यङ्गत्वेनादोषात् । नच व्यङ्गत्वे मानाभावः । स्वाध्यायपदस्य वेदे योगरूढ्या सुष्ठ्वामन्ताद्ध्यायो यस्येति योगस्यापि ग्राह्यत्वे देशकालगुरुविद्यार्थिनिष्ठानां शोभनगुणानां पाठार्थानुष्ठानेषु शङ्काराहित्यरूपस्य समन्तत्वस्य च ग्रहणेन स्वाध्याय इति समाख्याया एव तत्र मानत्वात् । नचैवं सत्यर्थज्ञानस्यापि प्राप्तेः कथं तदर्थत्वकल्पनस्यासङ्गतिरिति शङ्क्यम् । तैस्तस्य माणवकाधिकारत्वेनाङ्गीकारात् । वेदस्य गुरुमुखाद् ग्रहणदशायां तं प्रति स्वाध्यायत्वस्य भावित्वेन तदानीमभावात् । वेदमनूच्याऽऽचार्योऽन्तेवासिनमनुशास्ति सत्यं वद धर्मं चर स्वाध्यायान्मा प्रमद इति तैत्तिरीयाणां शिक्षोपनिषच्छ्रुत्या तथा निश्चयात् । आधानाग्निहोत्रादिविधीनामपि तत्र तदपेक्षकत्वस्याध्ययनविधिप्रसादलभ्यत्वोपगमेन प्रसादस्य च माणवके सामर्थ्याभावादभावेन तेषामप्याक्षेपकतायां कौण्ठ्याच्च । आश्रिते चैकवाक्यत्वे, ज्ञेयश्चेतिविध्यन्तरस्यापि संप्राप्तत्वात् तद्बलादेवार्थज्ञानमङ्गीकार्यम् । अन्यथा तद्वैयर्थ्यमिति । अत एव प्राथमिकाध्ययनस्यापि तदर्थत्वमसङ्गतम् । किन्त्वध्यापनप्रयुक्तत्वं यदुक्तं तन्मात्रं युक्तम् । ज्ञातुर्नियोज्यस्याचार्यत्वकामिनस्त्रैवर्णिकत्वे सत्त्वेन लिङ्प्रयोगेण च तत्र विधित्वस्यासन्दिग्धत्वात् । कृत्यानामावश्यकार्थेऽप्यनुशासनात् । वयसा जातस्नातव्यानां त्रैवर्णिकानामध्ययनस्यावश्यकत्वबोधनेन वाक्यसार्थक्यसिद्धेः । एवञ्च यद्यप्यध्यापनविधावध्यापनमात्रं श्रुतं, तथापि, साङ्गो वेदोऽध्येयो ज्ञेयश्चेतिश्रावणाद् गुरुणाङ्गापाठनेऽर्थाज्ञापने च तदसिद्ध्या वैयर्थ्ये वाक्यस्य प्रसक्ते तद्धारणाय तथाध्यापनमङ्गीकरणीयम् । आचार्यलक्षणस्मृतौ वेदस्य सकल्पं सरहस्यं चेति विशेषणाच्च । एवं साङ्ग-

ऽधीते ज्ञाते च तस्य स्वाध्यायः सिद्ध्यति । तदोक्तं फलमपि सम्पद्यत इति वाक्यत्रयैकवाक्यतयाऽवसीयते । तस्मात् प्राथमिकाध्ययनमध्यापनप्रयुक्तम्, अर्थज्ञानं च प्रत्यक्षश्रुतिलभ्यमिति भाट्टप्राभाकरयोः पूर्वोक्तकल्पना असङ्गतैव । कृत्यप्रत्यययोर्विध्यर्थकत्वपक्षेऽप्युक्त एव प्रकारो युक्तः । अन्यथा विधिकौण्ठ्यप्रसङ्गात् । एवञ्च रामानुजाचार्यैरध्ययनविधेरक्षरग्रहणपर्यवसायित्वं, स्वाध्यायस्य च स्वभावादर्थबोधकत्वं यदुक्तं तदप्युक्तादिशैव युक्तम् । नत्वन्यथापि । एवमेव भास्कराचार्योक्ते स्वाध्यायविधेरर्थावबोधपर्यवसितत्वेपि बोध्यम् । शैवस्तु विचारसार्थक्यमात्रमाह, न तु शास्त्रप्रयोजकं कञ्चन विधिमपीति तन्मतेऽवैयर्थ्यमेवायाति । तेन तत्तूदासीनप्रायम । एवं वेदान्तस्वविधावपि श्रवणपदेन शब्दग्रहणं मननपदेनावबोधोऽन्वेषणाविजिज्ञासापदाभ्यां चेच्छा विधीयत इति बोद्धव्यम । नचेच्छाया अविधेयत्वम् । तिस्रः खलु एषणा पर्येषितव्या इति चरके पतञ्जलिनाऽभिधानात् । अतस्तद्विजिज्ञासस्व तद् ब्रह्मेति विधिरपि तथा । एवञ्च श्रैत्रवं ये विधय उक्ताः, आत्मेत्येवोपासीत, स म आत्मेति, तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति । तेऽपि ज्ञान एव, न विचारे । ये चापि मध्वाचार्यैर्जिज्ञासासूत्रे, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्युक्तास्तेऽपि सर्वे ज्ञान एव पर्यवस्यन्ति ।

यत्तु शैवः । किमयं श्रोतव्य इति विधिर्नियमः परिसंख्या वा? । नाद्यः । वेदान्तश्रवणं स्वविषयमात्रावगतिसाधनं शास्त्रश्रवणत्वाद् वैद्यकशास्त्रश्रवणवदित्यनुमानेनापि प्राप्ततयाऽपूर्वत्वाभावात् । न द्वितीयः । अवघातवद् दृष्टफलस्योपायान्तरस्याप्राप्तत्वात् । इतरः । तथा सति श्रोतव्या एव वेदान्ता नाध्येया इति स्यात् । ततश्च विचारस्याप्ययोगात् पुरुषार्थासम्भवः । एवञ्च वेदाध्ययनादिरपि निवर्तेतेति महानेवानर्थः स्यादिति विकल्पितवान् । तत्तुच्छम् । हेतोः साधारणत्वेनानुमानेनाऽप्राप्तावपूर्वविधित्वस्य स्थिरत्वात् । कथं साधारणतेति चेद्? वेदान्तश्रवणं न स्वविषयावगतिसाधनं शास्त्रश्रवणत्वात् सूत्रश्रवणवदित्यवमवधेहि । किञ्च, श्रवणपदं शब्दग्रहणमात्रपरं वा, वाक्यार्थज्ञानपरं वा । आद्ये विधिवैयर्थ्यापत्तिः । स्वाध्यायविधिनैव चारितार्थ्यात् । नचाध्ययननियमाभावाय पुनर्विधानमिति वाच्यम । आचारविरोधात् । त्रैवर्णिकाधिकारस्यापि स्या-

अर्थज्ञानार्थं विचार आरम्भणीयः। तस्य च ब्रह्मरूपत्वात् तज्ज्ञाने पुरुषार्थो भवतीति न मन्तव्यम्। विचारं विनापि वेदादेव साङ्गादर्थप्रतीतेः।

---

गापत्तेश्च। द्वितीये तु निराबाधं विधित्वम्। अन्यथा वाक्यवैयर्थ्यापत्तेरिति।

अतः पूर्वकाण्डविधेरर्थज्ञानमात्रार्थत्वेनोत्तरकाण्डीयस्यापि ब्राह्मणश्रमणन्यायेन विशेषार्थतया विचारस्यावैधत्वान्नारम्भणीयः। ननु सन्देहाभावायाध्ययनादिविधौ विचार आक्षेप्य इत्यत आह। * शब्दाश्चेत्यादि *।

विशेषबोधनाय स्वोक्तं विभजते *अर्थज्ञानेत्यादि* सर्वोऽपि प्रयोजनमुद्दिश्य कार्यमारभते। तत्रास्य विचारस्य प्रयोजनं वेदार्थज्ञानं वाऽन्यद् वा। तत्रान्यस्यादर्शनाद्, वेदान्तविज्ञानसुनिश्चितार्था इतिवाक्यबोधितमाद्यमेवादर्तव्यम्। तत्रापि तस्य स्वतोऽपुरुषार्थत्वात् प्रयोजनान्तरमेष्टव्यम्। तच्च प्रयोजनमनन्तविधमप्यैहिकामुष्मिकपुरुषार्थेऽन्तर्भूतत्वात् पुरुषार्थरूपम्। तच्च वेदार्थज्ञानेन भवतीति तदर्थं विचार आरम्भणीयो, न तु स्वतःपुरुषार्थत्वात्। वेदार्थश्च, सर्वे वेदा यत्पदमामनन्तीति, वेदैश्च सर्वैरहमेव वेद्यः, वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे, परोक्षवादा ऋषयः परोक्षं च मम प्रियमित्यादिश्रुतिस्मृतिभिर्ब्रह्मरूपः। नच वेदोऽखिलो धर्ममूलमित्यादिस्मृतिभिर्धर्मरूप इति वाच्यम्। यज्ञो वै विष्णुरिति, धर्मो यस्यां मदात्मक इति श्रुतिस्मृतिभ्यां धर्मस्यापि ब्रह्मरूपत्वबोधनात् तद्रूपेणैवार्थत्वात्। ब्रह्मणस्तु ज्ञानादेव पुरुषार्थसिद्धिः। ब्रह्मविदाप्नोति परम्, आनन्दं ब्रह्मेत्युपक्रम्य, य एवं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान् कीर्त्या। दहरविद्यायां दहरपुण्डरीकवेश्मस्थतस्याकाशस्यैतदमृतमभयमेतद् ब्रह्मेत्यनेन ब्रह्मत्वमुक्त्वा, एवंवित् स्वर्गं लोकमेतीत्येवंविधेषु वाक्येष्वैहिकामुष्मिकपुरुषार्थस्य ज्ञानमात्रेणैव श्रावणात् तावतापि पुरुषार्थसिद्धेर्ब्रह्म * न मन्तव्यं * न विचार्यमित्यर्थः। न च श्रोतव्य

नचार्थज्ञानमविहितम्, अविचारिताश्च शब्दा नार्थं प्रत्याय-यन्तीति वाच्यम् । ज्ञेयश्चेति विधानात् । 'गीती शीघ्री शिरः-कम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः' इति बाधोपलब्धिश्च । शब्दश्चक्षुरादिवन्न सन्दिग्धार्थप्रतिपादकः । तदर्थश्च व्याकरणादिना निश्चीयते । यथा लौ-

---

इति विधिना श्रवणं विधाय तदर्थमननाय मन्तव्य इति विध्यन्तरदर्शनादवबोधसामान्यस्य तदर्थत्वेनाशक्यवचनत्वाद् युक्तिभिरनुचिन्तनमेव मननपदार्थो वक्तव्य इति विचारोऽपि प्राप्त एवेति वाच्यम् । तस्य शारीरपरत्वात् । प्रियत्वलिङ्गेन तथा निश्चयात् । नच वाक्यार्थः शारीरः परमात्मा वेति सन्देहे लिङ्गादिभिस्तन्निश्चितार्थबाधार्थमेव विचार आक्षेप्य इति वाच्यम् । वेदे साङ्ग इति विशेषणादधीतनिगमनिरुक्तव्याकरणस्य विचारं विनापि तैरेव तत्सम्भवात् । तेषु श्रुतीनामेवोदाहृतत्वात् । न च मास्तु वाक्यार्थज्ञानार्थं विचारापेक्षा । पदार्थज्ञानार्थं त्वावश्यकः । शब्दानां प्रायशोऽनेकार्थत्वेनानेकवृत्तिकत्वेन च कया वृत्त्या कमर्थमत्र बोधयन्तीतिनिश्चयाभावात्, तदर्थज्ञानस्य चाविहितत्वेन तदविचारादिति शङ्कनीयम् । अध्येयत्ववत् साङ्गस्य ज्ञेयत्वविधानेन गुरुमुखादेव पदार्थज्ञानस्यापि सिद्धेः । नच विध्यभावाद् गुरुणार्थो न वक्तव्य इति शङ्का कार्या । वाक्यान्तरं बाधोपलब्धेः । तदिदमुक्तं, *नचार्थेत्यादिना* नापि सन्देहाभावाय तदपेक्षा । शब्दस्य निःसन्दिग्धार्थबोधकत्वात् । न हि गौरित्युक्ते सत्त्वान्तरबोधो भवति । अतोऽनेकार्थत्वादिसङ्करेऽपि व्याकरणोक्तस्वरादिना सुखेन तन्निरासात् । किञ्च लोके प्रत्यक्षादिसंक्रमात्र तथा व्याकरणापेक्षेति तद्विरुद्धमपि क्वचिन्निर्णीयते । अत एव लौकिकशब्दार्थनिर्णायकत्वेऽपि न तत्र तेषामङ्गत्वप्रसिद्धिः । वेदे तु तेषामङ्गत्वस्य शास्त्रप्रसिद्धत्वात् प्रमेयस्य चा-[१]

---

१ न वारे पत्युः कामाय पतिः प्रियो भवति किं तर्हि आत्मनः कामाय सर्वं प्रियं भवतीतिश्रुत्युक्तलिङ्गेनेत्यर्थः ।

किकं वाक्ये तथा वेदेऽपि । न च तद्विरुद्धं निर्णेतव्यम् । अप्रामाणिकत्वप्रसङ्गात् । तस्माद् वेदार्थज्ञानार्थं विचारो नारम्भणीयः ।

स्यादेतत् ।

न वेदार्थज्ञानमात्राय विचारः । किन्तु ब्रह्मज्ञानाय । तस्य चात्मरूपत्वात् तस्य चाविद्याविच्छिन्नत्वाद् देहात्मभावदृढप्रतीतेस्तदतिरिक्तस्य ब्रह्मणोऽभावान्न वेदमात्रादसम्भावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पद्यते ।

---

ध्यन्तालौकिकत्वेन विचारवादिनोऽपि तेषामाध्ययणीयत्वात् तद्धेतुन्यायेन तैरेवार्थज्ञानसिद्धेः कृतमजागलस्तनप्रायेण विचारेणेति । तदिदमुक्तं * नचेत्यादिना * ।

अत्रैकदेशी स्वमतेन विचारकर्तव्यतामुपपादयति * स्यादेतदिति * वक्ष्यमाणप्रकारेण विचारस्यारम्भणीयत्वमुपपद्यतामित्यर्थः । तदाह * न वेदार्थेत्यादि * । * तस्येति * ब्रह्मणः । पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहेत्यादिषु विशेषणमात्रस्यापि तत्पदेन ग्रहणदर्शनात् । अयमर्थः । अनुपपद्यमानत्वान्मास्तु वेदार्थमात्रत्वेन ब्रह्मज्ञानाय विचारः । परं त्वात्मत्वेन ब्रह्मज्ञानाय विचारो न प्रतिक्षेप्तुं शक्यः । नच सन्दिग्ध एव विषये विचारस्य प्रवृत्तेरात्मनश्चाहंप्रत्ययगोचरत्वेनासन्दिग्धत्वादेवमप्यविचार्यत्वमेवेति शङ्क्यम् । अहंप्रत्ययस्य स्थूलोऽहं कृशोऽहं बधिरोऽहं गच्छाम्यहं श्वसिम्यहं, जानाम्यहमित्यादौ देहाद्युपाधिगोचरत्वेन विपर्यस्तत्वात् तेन सन्देहनिवृत्तेरभावात् । नच देहादिरेवात्मेति युक्तम् । देहस्यावस्थाभेदेषु परिणामान्तरदर्शनेन नश्वरत्वनिश्चयात् । अहंवित्तिवेद्ये त्वात्मनि, यः कृशः पूर्वं स इदानीं स्थूल इति पूर्वापरकाले ऐक्यभानेन तदभावात् । नच सोऽहमिति प्रत्यभिज्ञया देहादेरात्मत्वं वक्तुं शक्यम् । प्रत्यभिज्ञायाः सोऽयं दीपस्तदिदं जलमितिवत् सजातीयविषयत्वेन पूर्वापरकालकतदैक्यानिश्चायकतया तदविषयत्वात् । एवं तथाविन्द्रियनाशेऽपि जीवनदर्शनादुच्छ्वासोच्छ्वासयोर्बहिरागच्छतः

प्रत्युत देहात्मभावदृढप्रतीतेः श्रुतेरुपचरितार्थत्वं स्तुतित्वं वा कल्पयिष्यतीति ।

मैवम् ।

---

प्राणस्यापि ज्ञानादर्शनेनाचेतनत्वनिश्चयाद् बुद्धिमनसोरपि करणत्वेन सिद्धतया कर्तृत्वेनासिद्धत्वाद् विषयपार्थक्यस्य सर्वानुभवसाक्षिकत्वात् सर्वेषामिदङ्कारास्पदत्वाच्च । नचेदङ्कारास्पदानामात्मत्वं युज्यते । पुरोऽवस्थित एव विषये तथाप्रयोगदर्शनात् । आत्मनश्च प्रत्यग्वस्तुवेद्यत्वेन तथात्वाभावात् । नचैवं सिद्धं देहादिभ्यो विवेके सन्देहाभावादजिज्ञास्यत्वम् । तस्याविद्यावच्छिन्नत्वाद् विदुषां शास्त्रपरिपक्वबुद्धीनामप्यहंप्रत्ययं विविक्ततत्स्वरूपस्यागोचरत्वात् सुखदुःखादीनां प्रादेशिकत्वस्य चाभिमानेन तथा निश्चयात् तेषामपि देहात्मभावदृढप्रतीतेरविद्यासम्बन्धरहितस्य केवलस्यात्मनः प्रत्ययाभावेन दर्शनान्तरेऽपि व्यापकतया प्रतिपन्नस्य तस्यैव बृहत्त्वेन बृंहणत्वेन च तद्व्यतिरिक्तस्य ब्रह्मणोऽभावाद् विविक्ततत्स्वरूपज्ञानाय विचार आवश्यकः । नच वेदमात्राद् विविक्तात्मस्वरूपविषयासम्भावनाविपरीतभावनानिवर्तकं ज्ञानं सिद्ध्यति । प्रत्यक्षापेक्षया शब्दस्य निर्बलत्वात् । प्रत्युत प्रबलप्रमाणेन देहात्मभावदृढप्रतीत्या शास्त्रपक्वबुद्धिरपि दर्शनान्तराभिमानेन विविक्तात्मस्वरूपबोधिकायाः श्रुतेः कल्पनोपदेशतयोपचरितार्थत्वं वा, उपासनाशेषतया स्तुतित्वं वा कल्पयिष्यति । अतोऽसम्भावनाद्यपनयनेन श्रुतावुपचारादिनिवृत्त्यर्थं वेदार्थभूतात्मत्वेन ब्रह्मज्ञानाय विचार आवश्यक इति ।

एवमुक्तमेकदेशिमतं चोदकः प्रतिक्षिपति * मैवमिति * एवमुक्तं, न वेदार्थज्ञानमात्राय विचारः, किन्तु ब्रह्मज्ञानायेति । तत्र किं दर्शनान्तरवच्छुद्धस्त्युदासीनात्मत्वेन ब्रह्मज्ञानाय वेदान्तविचारः । ततश्च वेदार्थज्ञानमानुषङ्गिकमिति तत्र मतोऽभिमतम्, उत वेदार्थभूतात्मत्वेन तदर्थं स इति । तत्राद्यस्तु दर्शनान्तरैरेव सिद्धो, न विचक्षितपदार्थमधिकरोतीति । द्वितीयश्चेत् तदापि तत्र सङ्गच्छत इत्यर्थः ।

अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।
तपसा वेदयुक्त्या तु प्रसादात् परमात्मनः ॥
न हि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः ।

---

उक्तरूपस्यात्मनो वेदार्थत्वाभावे हेतुं कारिकया गृह्णाति *अलौकिक इति*। हिशब्दो हेतौ। अलौकिकत्वादित्यर्थः। किं तेनेत्याह *न युक्त्येति*। कथं तर्हि तत्प्रतिपत्तिरित्यत आह *तपसेत्यादि* तपोऽनशनादिरूपम्। वेदोक्ता युक्तिर्वेदयुक्तिः। न्यग्रोधफलमाहरेत्यादिरूपा। परमात्मप्रसादो मुख्यं साधनम्। अन्यथा तेषां प्रकृतिवैचित्र्याच्चित्रा वाचः स्रवन्ति हीतिन्यायेनान्यदेव बुद्ध्येरन्निति। एतदेव विभजते *न हीत्यादि*। अयमर्थः। भवान् हि श्रुतीनामनुपचरितार्थत्वाय दर्शनान्तरं आत्मगमकत्वेन स्वीकृतस्याहंप्रत्ययस्य प्रादेशिकग्राहकत्वं प्रदर्श्य तस्याविद्याख्योपाध्यवच्छिन्नात्मग्राहकत्वेन भ्रमत्वं च प्रदर्श्य तेन तन्निश्चयाभावात् कर्तृत्वभोक्तृत्वाद्यंशेऽपि तस्य भ्रमत्वं साधयितुं चिदेकरसस्यात्मनो ज्ञानाविषयत्वं च साधयितुमध्यासभाष्यसूचितां विषयत्वेन जडत्वेन व्याप्तिमङ्गीकृत्यैवमाह। अहंवित्तौ प्रकाशमानस्यात्मनो ज्ञानान्तरविषयत्वेन जडत्वापत्तिः। सर्वास्वपि वित्तिषु प्रकाशाश्रयत्वेन सिद्धस्यात्मनो घटमहं जानामीत्यादौ विषयत्वायोगः। चैत्रो ग्रामं गच्छतीत्यादौ क्रियाफलस्य संयोगस्योभयनिष्ठत्वेऽपि ग्रामादौ परसमवेतक्रियाफलशालित्वस्य कर्मत्वेन स्वसमवेतक्रियाफलशालिन आत्मनः परत्वाभावेन आत्मानमहं जानामीत्यादौ विषयस्यात्मनः कर्मलक्षणानाक्रान्ततया कर्मत्वायोगः। तस्य कर्तृभेदाङ्गीकारे कर्मभूतस्य तस्यानात्मत्वप्रसङ्गः। अप्रकाशमानत्वस्यैव जडत्वेन स्वस्मिन्नप्रकाशमानतयापि जडत्वापत्तिः। अनुभवबलेन कर्मकर्तृविरोधे परिहृते सिद्धे चाभेदे प्रकाशाश्रयरूपकर्तृत्वेनैव प्रकाशत इत्यङ्गीकारेऽपि यस्मिन्नर्थात्मानो प्रकाशेते तस्य ज्ञानरूपप्रकाशस्य स्वयमप्रकाशमानतया जडत्वे विषयाप्रकाशकत्वप्रसङ्गः। तस्याप्रकाशमानत्वेऽपि निलीय चक्षुरा-

रिवत् प्रकाशकत्वे तत्फलस्यैतत्फलस्यैव स्वयम्प्रकाशतायां भा-
ष्यतयाऽस्य जडत्वापत्तिः । पूर्वज्ञानफलस्यैतस्य जडत्वे एतज्ज्ञान-
फलस्याग्रिमस्यापि जडत्वापत्तिः । परम्पराङ्गीकारेऽनवस्था जगदा-
न्ध्यापत्तिश्चेत्यतः फलरूपा संवित् स्वयंप्रकाशाऽभ्युपेतव्या, न तु
विलीय चक्षुरादिवत् प्रकाशिका । ततः स्वयंप्रकाशत्वस्यैव चेत-
नत्वेन तदाश्रयतया प्रकाशमानस्यात्मनो विषयत्वेन जडत्वाप-
त्तिस्तदवस्था । नचार्थात्मानौ विना केवलायाः संविदः प्रकाशा-
भावात् संविदर्थात्मनां परस्परप्रकाशकत्वमेवेति परतःप्रकाश-
त्वमेव चेतनत्वम् । ततश्च संवित्तुल्यत्वादात्मनोऽपि जडत्वमिति
शङ्क्यम् । तथा सत्यर्थस्यापि चेतनत्वापत्तेः । अथ संविदर्थात्मनां प-
रस्पराविनाभावादात्यन्तभेद इति विभाव्यते, तदा तु संविद इव
तयोरपि स्वयम्प्रकाशत्वं सिद्धमित्यर्थात्मनोः संविदतिरेकेणानिर्वा-
च्यत्वात् संविदेव केवला सिद्ध्यति, न त्वर्थात्मभ्यां संहिता । वस्तु-
तस्तु संविदोऽर्थसहभावोऽपि न नियतः । अतीतानागतस्थले व्यभि-
भिचारात् । नच तत्राभाव एव विषय इति वाच्यम् । तस्याऽसत्त्वा-
त् । नच सोऽपि सन्निति वाच्यम् । सत्त्वस्य निर्वक्तुमशक्यत्वात् ।
सत्त्वं हि सत्ताख्यसामान्यसमवायो वा, अर्थक्रियाकारित्वं वा प्रका-
शमानत्वं वाऽभ्युपेयम् । तत्र नाद्यौ । सत्तायां सत्तासमवायाभावेन
अर्थक्रियाकारित्वेऽर्थक्रियाकारित्वाभावेन च तयोरसत्त्वेन तद्योगितो-
ऽप्यसत्त्वसिद्धेः । सत्तान्तराद्युपगमेऽनवस्थापाताच्च । न तृतीयः ।
मरुमरीचिकादेरपि तोयाद्यात्मना सत्त्वापातात् । नच मरुमरीचिका-
दीनां तोयाद्यात्मना असत्त्वेऽपि स्वरूपेण सत्त्वात् प्रकाशमानत्वं नानु-
पपन्नमिति वाच्यम् । तथापि सत्त्वस्य प्रकाशमानत्वातिरिक्तधर्मान्तर-
त्वेन प्रकाशमानत्वस्य तत्त्वाभावात् । अथ भावधर्म एव सत्त्वम् ।
अभावोऽपि भाव एव । भावान्तरमभावोऽन्यो न कश्चिदनिरूपणादि-
ति भावस्यैव भावान्तरात्मनाऽभावरूपत्वादिति विभाव्यते । तदापि
स भावधर्मः को वा । व्यवहारयोग्यत्वमिति चेत् । को नाम तत्र
व्यवहारः । अभिलाप इति चेत् । तद्योग्यत्वस्य खपुष्पेऽपि तुल्यत्वा-
त् । अतोऽभावस्य खपुष्पतुल्यत्वेनातीतानागतस्थलेऽर्थवियुक्तैव सं-
वित् । एवमर्थसहभावानियमे सिद्धे यत्र सहभावाभिमानस्तत्राप्यर्थ-
सत्ताया निर्वक्तुमशक्यत्वादर्थस्यानिर्वाच्यत्वमेव । तथैवात्मनो व्या-

एकत्वेनाहम्प्रत्यये प्रादेशिकत्वस्थूलत्वकृशत्वादिना भासमानस्य चन्द्रसद्भावे चन्द्रान्तरवद् भानात् तस्याप्यनिर्वाच्यत्वम्। तच्च सतो बाधाभावादसतश्चाभानात् सत्त्वासत्त्वयोरेकत्र विरोधेन सदसद्रूपताया अशक्यवचनत्वात् सदसद्विलक्षणत्वमेव। तथाच सति विषयत्वेन भासमानानां मरुमरीचितोयतुल्यत्वात् संविदेव केवला सती सिद्ध्यतीति सैवात्मा। तस्या अविषयत्वेऽपि तत्रैव कर्तृत्वभोक्तृत्वादयोऽध्यस्यन्ते। अप्रत्यक्ष आकाशे मालिन्यवदिति।

तदसङ्गतम्। विषयत्वेन जडत्वेन व्याप्तेः प्रत्यक्षबाधितत्वात्। आत्मनश्चेतनत्वस्योभयसंमतत्वात्, तस्य च प्रत्यग्वित्तिवेद्यत्वात्, प्रत्यग्वित्तिगोचरत्वेन विषयत्वस्य व्यापकतया जडत्वेन विषयत्वेन व्याप्तेरेव प्रत्यक्षसिद्धत्वाच्च। नच प्रत्यग्वित्तेश्चिदेकरसात्माग्राहकतया तदविषयत्वमेवेति वाच्यम्। तेन रूपेणाविषयत्वेऽपि प्रत्यक्त्वादिना रूपान्तरेण विषयत्वात्। अन्यथा विषयाभावेन तद्वित्तिलोपप्रसङ्गात्। सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यग्रसः प्रमाणैरेतैरवगत इति तापनीये प्रत्यक्त्वस्यापि तत्प्रमाणत्वेनैव श्रावणाच्च। नच तत्राहङ्कारस्यैव विषयत्वं, नात्मन इति वाच्यम्। न्यायादिमते आत्मन एव तथा भानात्। सांख्यादिमते च तस्य जडत्वेन तस्यां प्रतीतावहन्त्वचैतन्ययोः सामानाधिकरण्याभानप्रसङ्गात्। भासमाने च सामानाधिकरण्ये तस्यामहङ्कारविषयताया निवृत्तत्वात् प्रत्यक्त्वेनेतराविषयतया पारिशेष्यादात्मविषयत्वस्यैव सिद्धेः। नचैवं सति तत्स्वरूपतयाऽप्यात्मभानप्रसङ्गः। साधनान्तरवैकल्येन तथाऽऽपादयितुमशक्यत्वात्। लोकेऽपि मणिपरीक्षादौ तथा निर्णयात्। अन्यथा सांख्यादिशास्त्रतो नित्याऽनित्यवस्तुविवेकस्याप्यसम्भवे त्वदभिमतविचाराधिकारस्यासम्भवापत्तेः। अतोऽनिच्छतापि प्रत्यग्वित्तिवेद्यत्वमात्मनोऽङ्गीकार्यम्। नचैवं परतःप्रकाशत्वेन जडत्वापत्तिः। इदानीं तथात्वेऽपि, अत्रात्मा स्वयंज्योतिर्भवतीति श्रुतेः स्वप्न एव तस्य स्वतःप्रकाशत्वेन जाग्रति तदभावेऽपि भस्मच्छन्नाग्निवददोषात्। जाग्रति तथाऽभ्युपगमस्योक्तश्रुतिविरुद्धत्वाच्छ्रुते मते चित्स्वरूपत्वे सति स्वयम्प्रकाशसंविदाश्रयत्वस्यैव चेतनत्वात् तेनैवार्थतौल्यस्य परिहारात् कर्मकर्तृविरोधस्यानुभवबलेनैव परिहृतत्वाच्च। एवमाश्रयाश्रयिभावेन सिद्ध

आत्मसंविदोर्भेदे विषयत्वेनार्थोऽपि भिन्न एव । नच सत्त्वस्यानिर्वा-
च्यत्वात् तद्योगिनोस्तयोरनिर्वाच्यत्वं युक्तम् । सत्त्वनिर्वचनस्य तथा-
प्यानवश्यकत्वात् । अन्यथा संविदोऽप्यसत्त्वापातात् । प्रकाशस्वरू-
पत्वमेव सत्त्वमितिचेत् सिद्धमेव तर्हि तद्योगित्वादात्मनः सत्त्वम् ।
असत आश्रयत्वायोगात् । नच तत्प्रकाशस्वरूप एवात्मा, न तु त-
द्योगीति वक्तुं युक्तम् । प्रत्यक्त्वस्य तथाभानात् । अहं जानामीति,
ज्ञानवानहमित्येवमात्मधर्मत्वेनैव तस्य भानाच्च । एवं सिद्धे प्रका-
शाभिन्नस्यात्मनः सत्त्वे, सिद्धं चानारोपितरूपेण विषयत्वादर्थस्यापि
सत्त्वम् । असतोऽविषयत्वात् । खपुष्पं पश्याम्यनुभवामि प्रत्येमी-
त्याद्यप्रत्ययाद् मरीचितोयादीनां चारोपितरूपेण विषयत्वात् । न
चाभावे सत्ताव्यभिचारः । तस्यापि भावत्वात् । अननुभूयमानप्रति-
योगिरूपेणैव तत्राभावव्यवहारात् । अन्यथा निष्प्रतियोगिकत्वेनापि
तस्य प्रत्ययापत्तेः । नचैवं संविदोऽर्थाद्यविनाभावेऽर्थं विना संविद्-
प्रकाशात् स्वतःप्रकाशत्वहानिः । दीपादेस्तेजोरूपत्वस्येव संविदः
प्रकाशस्वरूपत्वस्यैव स्वतःप्रकाशपदार्थत्वात् । अत एवात्मनोऽपि
तथात्वात् । नचात्मनो व्यापकत्वेन सर्वत्र सत्त्वात् तत्रारोप्यमाणस्य
शरीरादेर्मरीचिकादावारोप्यमाणतोयादेरिव सत्त्वदेशस्याशक्यवचन-
त्वादसत्त्वमास्थाय प्रतीयमानत्वमात्रेण सदसद्विलक्षणत्वमनिर्वा-
च्यत्वं चास्थीयत इत्यपि साम्प्रतम् । वस्तुपरिच्छेदवादिमते तत्सम-
वाय्यादीनां सत्त्वेन तेषामेव देशत्वसिद्धेः । तदनाख्यातृमते च ब्रह्म-
कार्यत्वाद् ब्रह्मण एव तथात्वसिद्धेः । एवं सिद्धे देशे शरीरादीनां
च सिद्धत्वे तेषामात्मन्यारोपोऽपि सुकरः । अन्यथा खपुष्पादेरिव
दुष्करः स्यात् । अप्रत्यक्ष आकाशे मालिन्याध्यासवदप्रत्यक्ष आत्मनि
शरीराद्यध्यासोपपादनमप्यसङ्गतम् । बालानामवकाशरूपेण बुद्धा-
नां वस्तुस्वभावेनैव चाकाशस्यापि प्रत्यक्षत्वात् । अतः कल्पनाया
असङ्गतत्वात् तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति, भोक्ता भोग्यं
प्रेरितारं च मत्वेत्यादिश्रुतिविरोधाच्च, न कर्तृत्वभोक्तृत्वादिरहित
आत्मा । नच स वेदार्थः । ब्रह्मणो वेदार्थत्वात् । किन्तु स्वबुद्ध्या
तथा कल्पित इति, न तदर्थे विचारः शक्यवचनः । तदिदमुक्तं, न
हीत्यादि ।

अथ सत्यं ज्ञानमनन्तं ब्रह्म, अस्थूलमनण्वित्यादिश्रुतिभ्यो-

ब्रह्म पुनर्यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यम् । अणुमात्रान्यथाकल्पनेऽपि दोषः स्यात् । 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा ' नैषा तर्केण मतिरापनेया इति श्रुतेश्च ।

नच विरुद्धवाक्यानां श्रवणात् तन्निर्द्धारार्थं विचारः । उभयोरपि प्रामाणिकत्वेनैकतरनिर्द्धारस्याशक्यत्वात् । अचिन्त्याऽनन्तशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च ।

---

ऽधिगत इति वदन्ति । तत्राह * ब्रह्मेत्यादि * यथा हीदमस्थूलत्वादिकं वेदान्तेषूच्यते, तथा सर्वकामः सर्वगन्धः सर्वरसः, विश्वतश्चक्षुरुत विश्वतोमुख इत्यादिकमप्युच्यत इति तादृशमपि मन्तव्यं न तु निर्विशेषमात्रम् । न च तत्र स्वरूपस्यान्यथाकल्पनं युज्यते । प्रतिज्ञाहानिदोषात् । प्रतारकत्वापत्तेश्च । नच श्रोतुर्मन्दत्वे कश्चिदुपायो विधेय इति तदर्थं किञ्चित्कल्पनेऽप्यदोष इति वाच्यम् । तथा सति श्रुत्यभिप्रेतात्मस्वरूपाज्ञानेन श्रोतुर्योऽन्यथा सन्तमितिश्रुत्युक्तदोषापत्तेः । तथा वक्तुरपि, नैषा तर्केणेतिश्रौतानिषेधातिक्रमदोषापत्तेः । श्रुतिविरोधदोषापत्तेश्च । तदिदमुक्तम् * अणुमात्रान्यथेत्यादि * । ननु विरुद्धवाक्यश्रवणे श्रोता सन्दिग्ध । सन्देह चावश्यमनिष्टम् । अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यतीतिस्मरणात् । यस्य स्यादद्धा न विचिकित्सास्तीतिश्रुतेश्च । अतस्तन्निरासाय तन्निर्द्धार आवश्यकः । स च विचाराधीन इति तदर्थं स कार्य एवेत्यत आह * नचेत्यादि * विचारः कथं कार्यः ? किमेकतरबाधेन, किंवोभयसामञ्जस्येन । यद्याद्यः पक्षस्तदा तद्बाधनायाप्रामाणिकत्वं तस्य वक्तव्यम् । तथा सत्यन्यत्रापि तत्रापात इत्युपचारानिवृत्त्यर्थं यतमानस्याऽप्रामाणिकत्वापत्त्या वृश्चिकभिया पलायमानस्य विषमाशीविषमुखे निपातः । अथ द्वितीयस्तदा, परास्य शक्तिर्विविधैव श्रूयते, स हैनावानासेत्यादिश्रुतिभिर्ब्रह्मसामर्थ्येनैव विरोधस्य परिहारे विचारस्य वैफल्यमेवेति युक्त्या वेदार्थः सर्वथा न प्रतिपत्तुं शक्य

अत एवोपनिषत्सु तत्तदुपाख्याने बोधाभावे औपाधिकबोधे च तपस एवोपदेशः । नच तपःशब्देन विचारः । तस्य पूर्वानाधिक्यात् तप एव । नचोपाख्यानानां मिथ्यात्वम् । तथा सति सर्वत्रैव मिथ्यात्वं भवेद् विशेषाभावात् । न ह्यप्रामाणिकोक्ते विधौ वा उपाख्याने वा ब्रह्मस्वरूपे वा कस्य चिदपि विश्वासो यथा

---

इत्यतो वेदार्थज्ञानायोपायान्तरमेष्टव्यम् । तदपि श्रुत्यविरुद्धम् । तत्र प्रमाणमाह । * अत एवेत्यादि * तैत्तिरीये भृगोर्बोधाऽभावे वरुणेन तपसा ब्रह्म विजिज्ञासस्वेति, छान्दोग्ये इन्द्रप्रजापतिसंवादे इन्द्रस्यौपाधिकबोधे प्रजापतिना, वस द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमिति साधनान्तरस्य तपस एवोपदेशः कृत इत्यर्थः । ननु तप सन्ताप इतिवत्, तप आलोचन इत्यपि धातुरिति तन्निष्पन्नोऽयं शब्दो विचारार्थक एव मन्तव्यः । तथा सति श्रुत्यैव विचारस्य प्राप्तिरित्यत आह * नच तप इत्यादि * । * तप एवेति * तप एव तपःशब्देनोच्यत इत्यर्थः । अयं भावः । विचारो ह्येकतरबाधेन वा, ब्रह्मणः सामर्थ्यादिप्रदर्शनेन वा साधनीयः । न तु श्रोतरि तेन कोऽपि विशेषः सम्पाद्यः । तथा सति पठितवेदस्य साधनान्तरश्रवणं विनाऽपि विचारे वेदार्थः स्फुरेदेवेति पूर्वानाधिक्यादुपसदनवैयर्थ्यापत्तिः । गुरुवाक्योत्तरं विचार इत्यङ्गीकारे गुरोः खलत्वापत्तिः । उपसदनोत्तरमपि तस्यैवायोग्योपदेशेन दयाराहित्यप्राकट्यात् । तपसाऽङ्गीकारे तु तेन शिष्ये विशेषाधानादधिकारसम्पत्तौ साङ्गवेदवाक्येभ्य एव स्फूर्तिर्नच कोऽपि पूर्वोक्तदोष इति तपःशब्दो रूढ एवादरणीयः । तदेतदुक्तं, तप एवेति । अन्यथा छान्दोग्यविरोधस्यापरिहार इत्यपि बोधयितुं सावधारणमुक्तम् । ननु सत्यमुपनिषत्सु तप उपदिश्यते, तथाप्युपाख्यानेषु । न तु ज्ञानसाधनत्वेन क्वापि पृथग् विधीयते । उपाख्यानानि तु विद्यास्तुत्यर्थमसदपि बोधयन्तीति, न तदनुरोधे निर्बन्धः कार्य इत्यत आह * नचोपेत्यादि * । तथाच श्वेतकेतूपाख्यानस्थयुक्तीनां त्रिवृत्करणादीनां च मिथ्यात्वं स्यात् । तथाच सर्वो वेद एवोच्छिद्येतेत्यर्थः । तत्र हेतुमाह * न हीत्यादि * । सिद्धं वस्तु

लोके । तस्माद् वेदे अक्षरमात्रस्याप्यसत्यार्थज्ञानस्याभावाद् वैदिकानां न सन्देहोऽपि । किं पुनर्विरुद्धार्थकल्पना ।

विद्यासु च तदश्रुतेः । यदि वेदार्थज्ञाने विचारस्योपयोगः स्याद् अङ्गत्वेन व्याकरणस्येव विद्यासु श्रवणं स्यात् ।

स्वातन्त्र्ये च पुराणादेरिव मीमांसाया अपि प्रकारभेदेन प्रतिपादकत्वं स्यात् । तं त्वौपनिषदं पुरुषं पृच्छामीति तु तेषां निषेधः । अन्यथाज्ञानं नोपनिषदुक्तं फलं समर्पयति । तस्मा आरम्भणीय एव ब्रह्मविचारः ।

अनेन धर्मविचारोऽप्याक्षिप्त एव ।

---

लोके प्रत्यक्षसंवादमप्याह * तस्मादित्यादि * । *वैदिकानामिति* प्राक्वैदिकानाम् ।

प्रकारान्तरेणापि विचारानर्थक्यमाह * विद्यास्वित्यादि * स्वोक्तं व्याचष्टे * यदीत्यादि * चरणव्यूहे, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषामिति षडङ्गान्युक्त्वा, तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयत इत्येवोच्यते । तस्मात् साङ्गो वेदो ध्येयो ज्ञेयश्चेति विधावपि नाक्षेपो युक्त इत्यर्थः । एवं विधिमर्येऽपि विचाराक्षेपस्याशक्यवचनत्वाद् विधिप्रयुक्त्याऽऽरम्भणीयत्वं निवारितम् । ननु माऽस्त्वङ्गमध्यपातस्तथापि पुराणादिवत् स्वातन्त्र्येणैवारम्भणीयः । नचाऽप्रामाणिकत्वम् । प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानीति तत्रैवोपाङ्गेषु पाठात्, स्मृतावपि 'पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ' इति विद्यासु गणनाच्चेति चेत्तत्राह *स्वातन्त्र्ये चेत्यादि* । * तस्मादिति * वेदार्थज्ञानार्थं ब्रह्मज्ञानार्थं वाऽनुपयोगात् ।

ननु मास्तु ब्रह्मविचारस्यारम्भणीयत्वं, धर्मविचारे तु दोषाभावात् तदारम्भे को दोष इत्यत आह * अनेनेत्यादि * स तृतीयमतप्यत, स एतं दीक्षितवादमपश्यदित्यादौ तपस एव कथनेनेत्यर्थः ।

न ह्येतन्निराकर्तुः सोऽयमतिभार इति पूर्वपक्षः ।

सिद्धान्तस्तु ।

सन्देहवारकं शास्त्रं बुद्धिदोषात् तदुद्भवः ।

विरुद्धशास्त्रसम्भेदादङ्गैश्चाशक्यनिश्चयः ॥

तस्मात् सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः ।

अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तथाविधः ॥

परम्परया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दम- ध्यमयोः सन्देहो भवेत् । समानधर्मदर्शनात् । पदादिपाठवत् । तत्र यथा लक्षणानामुपयोग एवमेव मीमांसाया अपि ।

---

नन्विदमपि शास्त्रम् ऋष्युक्तत्वात् प्रामाणिकमतः कथं निराक्रियत इत्यत आह * नहीत्यादि * गुरोर्मते एव निराकृते शिष्यस्य का वा गणनेत्यर्थः । एवञ्च यथा मीमांसाकरणात् पूर्वमङ्गैरेव सन्देहनिवृत्ति- स्तथेदानीमपि भविष्यतीति व्यर्थं तत्करणमिति केवलवैदिककृतः पू- र्वपक्षो निरूपितः ।

उत्तरं वक्तुं गृह्णन्ति * सिद्धान्त इत्यादि * । ननु शब्दस्य निःसन्दिग्धमर्थप्रतिपादकत्वात् सन्देह एव कथमित्यत आहुः * बु- द्धीत्यादि * । तन्निवृत्तिर्व्याकरणादिभिरेव भविष्यतीत्यत आहुः * विरुद्धेति * । * सर्वनिर्णय इति * पूर्वोत्तरकाण्डार्थनिर्णयः । कथमिद- मित्यपेक्षायां व्याचक्षते * परम्परयेत्यादि * । * समानधर्मदर्शनादिति * अर्थे समानधर्मदर्शनात् । यथा अक्ताः शर्करा उपदधातीत्यत्राञ्जन- करणत्वं घृततैलवसादिषु समानम् । तथाच यथा संहिताध्ययनद- शायां, देवाय ते यजमानाय शीकाय ते स्वाहेत्यादौ सन्देहाभावे- ऽपि पदपाठकाले, देवय ते शीकय ते इति ह्रस्वश्रुत्या सन्देहे, अथा- दावुत्तरे विभागे ह्रस्वव्यञ्जनपर इत्यधिकारस्थस्य, देवाशीकेत्यादेः । त्रपुश्च मे सिधुश्च मे सुश्चन्द्रदस्म इत्यादेः पदपाठे, त्रपु च मिथु चरन्, सुचन्द्रेति पाठात् सन्देहे, त्रपुमिथुपूर्वः शकारश्चपरः सु- पूर्वश्चन्द्रपर इति । उत स्वानासो दिवि षन्तु, आ पो हिष्ठा मयोभुव

तदुक्तम् ।

असन्दिग्धेऽपि वेदार्थे स्थूणाखननवन्मनः ।

मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो दृढमिति ॥

तथाच निर्णये येन केन चिद्रक्तव्ये हरिः स्वयं व्यासो विचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति । ब्रह्मजिज्ञासा कर्तव्ये-

---

इत्यादेः पदपाठे, उत स्वानामः, दिवि सन्तु, आपः हि स्थ इति पाठात् सन्देहे, स्वानामोदिव्यापोहीत्यादिसूत्रस्योपयोग इति लक्षणानां प्रातिशाख्यसूत्राणां सन्देहनिवृत्तावुपयोगः । तथाऽर्थश्रवणेऽपि वाजिभ्यो वाजिनमित्यत्र किमामिक्षाऽन्नवन्तो विश्वेदेवा वाजिनामानोऽन्ये वा वाजियागदेवताः । गायत्र्यां सविता, सूर्यो वा परब्रह्म वा । आकाशादेव समुत्पद्यन्त इत्यत्र भूताकाशो वा ब्रह्म वेति सन्देहः समानधर्मदर्शनान्मन्त्रादीनां भवेदिति तन्निवृत्त्यर्थं मीमांसाद्वयस्याप्युपयोग इति ज्ञानविधावुपाङ्गभूतयोस्तयोरप्याक्षेपो युक्त एवेत्यर्थः ।

अस्मिन्नर्थे प्राचां संमतिमाहुः * तदुक्तमित्यादि * । * दृढमिति * सन्देहाभावो दार्ढ्यं चेत्यर्थः । एतेन शास्त्रप्रयोजनमारम्भसमर्थनायोक्तम् । विचारकर्तव्यतासमर्थनेनोपोद्घातरूपा अधिकरणसङ्गतिरपि बोधिता । अतः परं प्रयोजनवत्त्वेऽपीदं शास्त्रं कया सङ्गत्या आगतम् । श्रुतौ च तपस उपदेशात् तदेव च कुतो नोक्तमित्याकाङ्क्षायां शास्त्रसङ्गतिं वदन्त एव सूत्राक्षराणि व्याकुर्वन्तः प्रथमतो वाक्यार्थमाहुः *तथाचेत्यादि* । उक्तरीत्या वेदार्थनिर्णयस्यावश्यकत्वात् तन्निर्णये येन केन चिद्वक्तव्ये यदा कालवशात् तप आदीनामसम्भवं व्यक्ततया तेषामसाधकत्वं च दृष्टवाँस्तदा जगद्दुःखदूरीकरणार्थं हरिः स्वयं व्यासरूपेणावतीर्य वेदव्यासादिकार्यं कृत्वा सर्ववेदार्थनिर्णयार्थं ब्रह्मविचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति । ब्रह्मजिज्ञासा कर्तव्येति । धर्मादिवद् व्यासोक्तत्वादपि कर्तव्यता । अत इदानीं तपो न वेदार्थज्ञानसाधनं. किन्त्विदमेव साधनम् । किञ्च

ति। व्यासोक्तत्वादपि कर्तव्यता। कर्तव्यपदाध्याहारे स्वातन्त्र्यं न भवति। अन्यथा, अथ योगानुशासनमितिवत् स्वतन्त्रता स्यात्। तथाच ज्ञानानुपयोगः। तथाहि। तं त्वौपनिषदं पुरुषं पृच्छामीति केवलोपनिषद्वेद्यं ब्रह्म, न शास्त्रान्तरवेद्यम्। तद् यदि मीमांसा स्वतन्त्रा स्यात् तज्जनितं ज्ञानं न ब्रह्मज्ञानं भवेत्।

अथवा, अध्याहारकरणापेक्षयाऽथशब्द एवाधिकारे व्याख्येयः। वेदाध्ययनानन्तर्यं तु सिद्धमेव। न ह्यनधीत एव वि-

---

तापसानाम् ऋषीणामपि स्वभावभेदाल्लोकानां सन्देहं यदा दृष्टवांस्तदा करुणाया कृतवानिति तदुक्तरीत्या प्रयतने प्रसादोऽपि भविष्यति, तेन वेदार्थबोधश्चेति नास्य गतार्थत्वम्। कृपैव च सक्तिरित्यर्थः। ननु सूत्रे कर्तव्यपदाभावादध्याहारस्य च दोषत्वात् किमित्येवं व्याख्यायत इत्याकाङ्क्षायामाहुः * कर्तव्यपदेत्यादि * * भवेदित्यन्तम् * अत उक्तदोषनिवृत्त्यर्थमध्याहृत्य व्याख्यायत इत्यर्थः। अत्र सर्वसंमतत्वादेवमध्याहारपक्ष उक्तो वाक्यार्थश्च।

अतः परं पदानामर्थं वदिष्यन्तः पूर्वोक्तः पक्षो वक्ष्यमाणदोषग्रासान्न साधुरित्याशयेन पक्षान्तरमाहुः। * अथवेत्यादि *। अधिकारो नाम नियमविशेष इति केचित्। यथा, आकडारादेका संज्ञेति। प्रारम्भ इत्यन्ये। यथा, अथ योगानुशासनमिति। प्राधान्येन निरूपणमित्यपरे। प्रस्ताव इति कैयटे, अथ शब्दानुशासनमित्यत्र व्याख्यातः। तत्रैकदेशनियमस्य पूर्वप्रकृतसापेक्षत्वात् पूर्वं च कस्याप्यप्रकृतत्वात् सोऽत्र न युज्यते। अतः प्रारम्भादेः प्रस्तावाव्यतिरेकात् प्रस्ताव व्याख्येयः। तथाच ब्रह्मजिज्ञासारूपं शास्त्रमधिक्रियते प्रस्तूयत इति व्याख्याने कल्पनाराहित्यादिदं तदपेक्षया ज्याय इत्यर्थः। नन्वधिकारार्थत्वे आहते कर्तव्यपदाध्याहाराभावेन ब्रह्मजिज्ञासाया विध्यनाक्षिप्तत्वाद् वैदिकाधिकारिणोऽप्राप्तेः शूद्रादिरनधीतवेदोऽपि ब्रह्मजिज्ञासायामधिकुर्यादिति कथं ज्याय इत्यत आहुः। * वेदेत्यादि *। अग्रेवेदवाक्यानामेवविचारदर्शनादेमद्विचारकस्येदानीन्तनस्यापि वेदाध्ययनानान्तर्यं त्वर्थादेव सिद्धमिति न वैदिकाधिका-

चारमर्हति । तत्रैतत् स्यात् स्वतन्त्रतेति । तत्र प्रतिविधास्यामः । वेदार्थब्रह्मणो वेदानुकूलविचार इति । किमत्र युक्तम् । व्याख्यानमिति । व्याख्यानतो विशेषप्रतिपत्तेः । यथा कर्मणि दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः । अथातो दर्शपूर्णमासौ व्याख्यास्याम इति ।

---

रिणोऽप्राप्तिरित्यतो ज्याय इत्यर्थः । ननु तर्ग्गोविध्यनाक्षिप्ततया पुराणादिवत् स्वातन्त्र्यं तु सिद्धम् । तथा सति पूर्वोक्तो ज्ञानानुपयोगरूपो दोषस्तु स्यादित्याकाङ्क्षायां, तत्रैतत् स्यादित्यादिनाऽनूद्य प्रतिविधानप्रकारमाहुः । * तत्रेत्यादि * । अनुपदमेव वक्ष्याम इत्यर्थः । ननु प्रक्षालनपङ्कन्यायेनैतदपेक्षया तदादरणमेव युक्तमित्यत आहुः । * वेदार्थेत्यादि * । वेदार्थभूतं यद्ब्रह्म तत्सम्बन्धी सपरिकरतज्ज्ञापको वेदानुकूलो वेदवाक्यानां विरोधपरिहारादिना तेषूपचारादिदोषनिवर्तको विचारो मीमांसारूप इति हेतोः । अत्र हि सर्ववेदार्थत्वेन ब्रह्म जिज्ञास्यम् । अन्यथा वेदवेदान्तयोरैकशास्त्र्यं न स्यात् । तदभावे च जैमिन्याद्युक्तादिशा मुमुक्षुप्रवृत्तिप्रतिघाते शास्त्रवैयर्थ्यमापद्येत । विचारस्य च यदि वेदानुकूल्यं न स्यात् तदाप्यास्तिका न प्रवर्तेरन् । अत आवश्यकत्वात् स्वातन्त्र्येऽपि विरोधाभावाद्वेदानुकूल्येन तज्जनितज्ञानस्य ब्रह्मज्ञानरूपत्वात् प्रतिविधानमेव युक्तमित्यर्थः । अयं प्रकारो माध्वानामपि सम्मतस्तद्बोधकस्कान्दवचनोपन्यासादवगन्तव्यः । अध्याहारपक्षेऽप्येवं वक्तुं शक्यत्वात् तं ज्यायांसं मन्यमानोऽनुयुङ्क्ते । * किमत्रयुक्तमिति * स्वतन्त्रताप्रतिविधानस्याप्यपेक्षितत्वेन प्रतिपत्तिगौरवदोषस्यात्रापि सत्त्वादध्याहारकरणाथशब्दव्याख्यानपक्षयोर्मध्ये किं युक्तं, तद्वक्तव्यमित्यर्थः । तत्रोत्तरमाहुः । *व्याख्यानमिति* । अथशब्दव्याख्यानपक्ष एव युक्त इत्यर्थः । तत्र हेतुमाहुः ।*व्याख्यानत इत्यादि* । ननु कात्र विशेषप्राप्तिर्यास्तीत्यत आहुः । * यथेत्यादि * तथाच यथा कल्पसूत्रेण प्रयोगप्रकारादिबोधनात् तत्पदार्थसन्देहनिवृत्तिस्तथानया मीमांसया ब्रह्मणीति तत्र यथाऽधिकारेऽथशब्दस्तथात्रापीति

अथैवैतर्हीमानि सिद्ध्यन्ति प्रयोजनानि । अधिकाकाङ्क्षा न भवेत् । अध्याहारश्च । पुरुषार्थश्च सिद्ध्येत् । उच्छेदश्च न भवेदिति । कथम् । अथशब्दोऽर्थचतुष्टये वर्तते । मङ्गले, अधिकारे, आनन्तर्ये, अर्थान्तरोपक्रमे च । तत्र श्रुतिमात्रेणैव मङ्गलसिद्धेरर्थान्तरस्य पूर्वोक्तस्याभावान्नात्र तत्कल्पनम् । अथाऽवशिष्यते आनन्तर्ये वाऽधिकारे वेति । आनन्तर्ये त्वध्ययनस्य स्वतःसिद्धत्वादधिकाकाङ्क्षा भवति । तथा तदभावान्न विचारः सिद्ध्येत् ।

---

कलासूत्रतौल्यरूपविशेषस्य प्रतिपत्तिरित्यर्थः ।

नन्वध्याहारपक्षेऽपीदं सुवचमतः सर्वसंमतत्वादध्याहारपक्ष एव युक्तो, नाऽथशब्दस्याधिकारव्याख्यानपक्ष इत्यत आहुः * अथैवेत्यादि * । *एतर्हीति* व्याख्यानपक्षे । अत्र चोदयति *कथमिति* स्वोक्तं विभजते * अथेत्यादि * । तत्र मङ्गले, ' ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिष्क्रान्तौ तेन माङ्गलिकावुभाविति ' । अधिकारे यथा, अथैष ज्योतिरिति वेदे । अथ योगानुशासनमित्यादि च लोके । आनन्तर्ये यथा, भुक्त्वा अथ व्रजतीति । अर्थान्तरोपक्रमे यथा पूर्वं किञ्चिदुक्त्वा पुनर्विकल्पान्तरे क्रियमाण उच्यते, अथायमाशय इति । यद्यपि कोशे, ' मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथेति । अथाथो संशये स्यातामधिकारे च मङ्गले । विकल्पानन्तरप्रश्नकात्स्न्र्यारम्भसमुच्चय' इत्यर्थान्तरमप्युक्तम् । गौडो भवान् अथान ब्रूम इति प्रतिज्ञायामपि दृश्यते । तथापि प्रच्छकस्य सन्देग्धुश्च कस्याप्यनुक्तत्वेन, अथ शक्तोऽसि भोक्तुमित्यादिवत् प्रश्नसंशयव्यञ्जकवाक्याभावेन च प्रश्नसंशययोर्वक्तुमशक्यत्वात् स्वसंशयस्य स्वतोनिवृत्त्यभावेन स्वसंशयस्य, अविज्ञातं विजानतामितिश्रुतेः कृत्स्नस्य ब्रह्मणो विचारयितुमशक्यत्वेन कात्स्न्र्यस्य च प्रकृतविरुद्धत्वाद् विकल्पस्य पक्षान्तरात्मकत्वेनारम्भस्योपक्रमात्मकत्वेन चार्थान्तरोपक्रमानतिरेकात् समुच्चयनियमरूपाधिकारयोरप्यर्थान्तर-

सापेक्षत्वेन विकल्पतुल्यकक्षत्वादुपयुक्तविचारकार्त्स्न्यप्रतिज्ञयोरपि प्रस्तावाव्यतिरेकादथशब्दोऽत्रार्थचतुष्टये सम्भावितो वर्तते। तत्रान्यार्थकृतस्य पटहमृदङ्गादिध्वनेरिवाथशब्दस्यापि श्रवणमात्रेण मङ्गलसिद्धेः स्मृतिव्याकोपपरिहारात् तस्याः स्वरूपश्रवणमात्रकार्यत्वेन मङ्गलस्यार्थान्तरबोधनाप्रतिरोधकत्वाच्च न तन्मात्रकल्पनं युक्तम् । पूर्वं कस्याप्यर्थस्यानुक्तत्वादर्थान्तरोपक्रमस्यापि कल्पनं न युक्तम्। यत् पुनरानन्तर्यप्रस्तावरूपमर्थद्वयमवशिष्यते, तत्रानन्तर्ये यस्य कस्य चिदानन्तर्यं तु स्वभावादेव प्राप्तमिति, न तस्य वक्तव्यम् । यदि च शाबरभाष्योक्तमध्ययनानन्तर्यमङ्गीक्रियते, तर्ह्यनधीतवेदो विचारेऽधिकरोतीति । तदा तस्य विचारार्थकजिज्ञासापदेनैवार्थात् सिद्धेरथशब्दोक्तानन्तर्यप्रतियोगिनोऽधिकाकाङ्क्षा भवति, अध्ययनातिरिक्तात् कस्मादनन्तरं ब्रह्म विचारयितव्यमिति । तस्यां च सत्यामध्ययनातिरिक्तस्य कस्यापि तन्मतेऽदर्शनात्र प्रकृतविचारसिद्धिरित्यर्थः। ननु संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति वदद्भिः प्राचीनवृत्तिकारैर्द्वयोर्मीमांसयोरैकशास्त्र्यमङ्गीकृतम् । ततश्चाग्नेयादिषट्कभेदवदध्यायभेदवच्चावान्तरप्रमेयभेदेन भेदेऽपि प्रयोजनैक्याद्, अथाऽतो धर्मजिज्ञासेत्यारभ्य, अनावृत्तिः शब्दादित्यन्तमेकं शास्त्रमतः कर्मविचारानन्तर्यमस्येति रामानुजाचार्याः।

आराधनाराध्यभूतयोर्धर्मब्रह्मणोः प्रतिपादकत्वेनैकशास्त्र्यम्'। अथाऽतो ब्रह्मजिज्ञासेति पृथगारम्भस्त्वथातः शेषलक्षणमित्यादिवदवान्तरपरिच्छेदार्थ इति तदेकदेशी नव्यः शैवः।

पूर्वं धर्मजिज्ञासा कार्या, पुरुषमात्रविषयत्वात् । ब्रह्मज्ञानं तु कस्य चिदेव मुमुक्षोरिति धर्मविचारानन्तरं चतुर्णां प्रतिपन्नाश्रमान्तराणां सा। सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति सूत्रयतः सूत्रकारस्यापि ज्ञानकर्मसमुच्चयादेव मोक्षप्राप्तिरभिप्रेतेति ज्ञायते । अपरिज्ञाते च कर्मणि केन समुच्चयः, केन नेति न ज्ञातुं शक्यम् । ज्ञाते तु तस्मिन् नित्यकाम्यनिषिद्धानां हेयोपादेयविभागविज्ञानात् काम्यनिषिद्धे हेये, नित्येन समुच्चय इति सुखेन ज्ञातुं शक्यते। किञ्च। तृतीये, कर्मसमृद्ध्यर्थानामुद्गीथाद्युपासनानां चिन्तनात् तेषां च कर्माधिकृतपुरुषमात्रविषयत्वात् कर्माविज्ञानेन तच्चिन्ताया

तथा हि, न तावद्धर्मविचारानन्तर्यम् । विपर्ययसम्भवात् ।

---

अप्यनुपपत्तिरतोऽपि तदानन्तर्यमिति भट्टभास्कराचार्याः ।

किञ्च, तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मण इति श्रुतौ तर्कोपकरणेन शब्देन परमात्मानं सम्यग् ज्ञात्वा प्रज्ञाख्यभावनाविधानात्, पतञ्जलिनाऽपि, स तु दीर्घकालादरनैरन्तर्यसत्काराऽऽसेवितो दृढभूमिरिति सूत्रयता दीर्घकालासेवितस्याव्यवधानासेवितस्य ब्रह्मचर्यतपःश्रद्धायज्ञादिरूपसत्कारासेवितस्य योगस्य दृढभूमित्वकथनाच्च क्रियमाणाया भावनाख्योपासनाया दृढत्वाय यज्ञोपयोगः कैश्चिदिष्यते ।

तत्तत्फलार्थं विहितानामपि कर्मणां, तमेतं वेदानुवचनेनेत्यादिश्रुत्या, एकस्य तूभयत्वे संयोगपृथक्त्वमितिन्यायेन क्रत्वर्थखादिरत्वस्य वीर्यार्थत्ववद् ब्रह्मभावनार्थत्वं कैश्चिदिष्यते ।

तथापरैः श्रेयःपरिपन्थिकल्मषनिबर्हणद्वारा यज्ञोपयोग इष्यते ।

अन्यैः पुनर्महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः, यस्यैतेऽष्टाचत्वारिंशत् संस्कारा इति स्मृत्या यज्ञादिसंस्कृतस्य पुरुषस्य दीर्घकालादरनैरन्तर्यैर्ब्रह्मभावनामासेवमानस्य समूलकाषमविद्यावासनानिवृत्त्या प्रत्यगात्मवैशद्यात् पुरुषसंस्कारद्वारा यज्ञोपयोग इष्यते।

अपरैरृणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेद् इति स्मृत्या ऋणत्रयापाकरणेन कर्मणां ब्रह्मज्ञानोपयोग इष्यते इति नाना मतानि वाचस्पत्ये लिखितानि । अतः कर्मज्ञानसमुच्चयस्य बहुवादिसम्मतत्वात् पूर्वोक्तरीत्या धर्मविचारेणाधिकाकाङ्क्षापूरणसम्भवात् तदनन्तरं सुखेन ब्रह्मविचारसिद्धिरित्याकाङ्क्षायामाहुः । * तथाहि, नेत्यादि * । तदुक्तरीत्या समुच्चयाङ्गीकारेऽपि धर्मविचारानन्तर्यं नोपपद्यते । कुतः *विपर्ययसम्भवात्* हृदयस्याग्रेऽवद्यति अथ जिज्ञासा अथ वक्षस इति वद् वेदवेदान्ताध्ययनक्रमनियामकप्रमाणाभावात् । नच कर्त्रैक्यात् क्रमनियमः शङ्क्यः । आघारदर्शपूर्णमासवत् कर्मब्रह्मविचारयोरेकाङ्गिप्रयुक्ताङ्गत्वेन वा, पञ्चप्रयाजवदेकाङ्गिप्रयुक्तानेकाङ्गत्वेन वा, गोदोहनादिवदधिकृताधिकारत्वेन वा, षड्यागवत् फलैक्येन वा कर्त्रैक्यं येन बोध्येत तादृशप्रमाणस्याप्यनुपल-

